७. समौ चिद् हस्तौ न समं विविष्टः
सम्मातरा चिन्न समं दुहाते ।
समयोश् चिन्न समा वीर्याणि
ज्ञाती चित् सन्तौ न समं पृणीतः ॥ १०-११७-९

८. एकपाद् भूयो द्विपदो वि चक्रमे
द्विपाद् त्रिपादम् अभ्येति पश्चात् ।
चतुष्पाद् एति द्विपदाम् अभिस्वरे
संपश्यन् पङ्क्तीर् उपतिष्ठमानः ॥ १०-११७-८

९. शंसा मित्रस्य वरुणस्य धाम
शुष्मो रोदसी बद्बधे महित्वा ।
अयन् मासा अयज्वनाम् अवीराः
प्र यज्ञमन्मा वृजनं तिराते ॥ ७-६१-४

१०. अग्निः सप्तिं वाजम्भरं ददाति
अग्निर् वीरं श्रुत्यं कर्मनिष्ठाम् ।
अग्नी रोदसी वि चरन् समञ्जन्
अग्निर् नारीम् वीरकुक्षिं पुरन्धीम् ॥ १०-८०-१

११. व्रजं कृणुध्वम् स हि वो नृपाणो
वर्म सीव्यध्वम् बहुला पृथूनि ।
पुरः कृणुध्वम् आयसीर् अधृष्टाः
मा वः सुस्रोच् चमसो दृंहता तम् ॥ १०-१०१-८

१२. किम् अङ्ग त्वा मघवन् भोजम् आहुः
शिशीहि मा शिशयं त्वा शृणोमि ।
अप्नस्वती मम धीरस्तु शक्र
वसुविदं भगमिन्द्रा भरा नः ॥ १०-४२-३

१३. यो रजांसि विममे पार्थिवानि
त्रिश्चिद् विष्णुर् मनवे बाधिताय ।
तस्य ते शर्मन्नुपदद्यमाने
राया मदेम तन्वा तना च ॥ ६-४९-१३

१४. आ यद्रुहाव वरुणश्च नावम्
प्र यत्समुद्रमीरयाव मध्यम् ।
आधि यदपां स्नुभिश्चराव
प्र प्रेंख ईंखयावहै शुभे कम् ।। ७-८८-३

१५. पतङ्गक्तमसुरस्य मायया
हृदा पश्यन्ति मनसा विपश्चितः ।
समुद्रे अन्तः कवयो वि चक्षते
मरीचीनां पदमिच्छन्ति वेधसः ।। १०-१७७-१

१६. आ यद् हरी इन्द्र विव्रता वेर्
आ ते वज्रम् जरिता बाह्वोर्धात् ।
येनाविहर्यतक्रतो अमित्रान्
पुर इष्णासि पुरुहूत पूर्वीः ।। १-६३-२

१७. अभ्रातृव्यो अना त्वम्
अनापिर् इन्द्र जनुषा ।
युधेद् आपित्वम् इच्छसे ।। ८-२१-१३

१८. आ नो महीमरमतिं सजोषा
ग्नां देवीं नमसा रातहव्याम् ।
मधोर् मदाय बृहतीमृतज्ञाम्
आग्ने वह पथिभिर् देवयानैः ।। ५-४३-६

१९. प्र सीम् आदित्यो असृजद् विधर्ताँ
ऋतं सिन्धवो वरुणस्य यन्ति ।
न श्राम्यन्ति न वि मुचन्त्येते
वयो न पप्तुः रघुया परिज्मन् ।। २-२८-४

२०. द्यावा ह क्षामा प्रथमे ऋतेन
अभिश्रावे भवतः सत्यवाचा ।
देवो यन् मर्तान् यजथाय कृण्वन्
सीदद् होता प्रत्यङ् स्वम् असुं यन् ।। १०-१२-१

२१. यज्ञेन वर्धत जातवेदसम्
अग्निं यजध्वम् हविषा तना गिरा ।
समिधानं सुप्रयसं स्वर्णरम्
द्युक्षं होतारं वृजनेषु धूर्षदम् ॥ २-२-१

२२. इन्द्राय साम गायत
विप्राय बृहते बृहत्
धर्मकृते विपश्चिते पनस्यवे ॥ ८-९८-१

२३. विश्वो यस्य व्रते जनो
दाधार ब्रह्मणस्पते
पुनानस्य प्रभूवसोः ॥ ९-३५-६

---

# चतुर्थी।

## अध्यात्मा

१. यज्ञेन यज्ञमयजन्त देवाः
तानि धर्माणि प्रथमानि आसन्।
ते ह नाकं महिमानः सचन्त
यत्र पूर्वे साध्याः सन्ति देवाः ॥ १-१६४-५०

२. ऋतेन ऋतम् नियतम् ईळ आ
गोर् आमा सचा मधुमत् पक्वमग्ने।
कृष्णा सती रुशता धासिनैपा
जामर्येण पयसा पीपाय ॥ ४-३-९

३. वनेषु वि अन्तरिक्षं ततान
वाजम् अर्वत्सु पय उस्रियासु।
हृत्सु क्रतुम् वरुणो अप्सु अग्निम्
दिवि सूर्यम् अदधात् सोमम् अद्रौ ॥ ५-८५-२

४. ध्रुवं ज्योतिर्निहितं दृशये कम्
मनो जविष्ठं पतयत्स्वन्तः।
विश्वे देवाः समनसः सकेता
एकं क्रतुमभि वि यन्ति साधु ॥ ६-९-५

५. अयं कविरकविषु प्रचेता
मर्तेषु अग्निरमृतो नि धायि।
स मा नो अत्र जुहुरः सहस्वः
सदा त्वे सुमनसः स्याम ॥ ७-४-४

६. वैश्वानरस्य सुमतौ स्याम
राजा हि कं भुवनानां अभिश्रीः।
इतो जातो विश्वमिदं वि चष्टे
वैश्वानरो यतते सूर्येण ॥ १-९८-१

७. अहश्च कृष्णम् अहर् अर्जुनं च
वि वर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजा
अवातिरज्ज्योतिषाग्निस्तमांसि ॥ ६-९-१

८ दृष्ट्वा रूपे व्याकरोत्
सत्यानृते प्रजापतिः ।
अश्रद्धामनृते अदधाच्
श्रद्धां सत्ये प्रजापतिः ॥ यजु. १९-७७

९. सुविज्ञानं चिकितुषे जनाय
सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत् सत्यं यतरद् ऋजीयस्
तदित्सोमोऽवति हन्ति असत् ॥ ७-१०४-१२

१०. नाहं तन्तुं न वि जानामि ओतुम्
न यं वयन्ति समरेऽतमानाः ।
कस्य स्वित् पुत्रः इह वक्त्वानि
परो वदाति अवरेण पित्रा ॥ ६-९-२

११. स इत्तन्तुं स वि जानात्योतुम्
स वक्त्वानि ऋतुथा वदाति ।
स ईम् चिकेतदमृतस्य गोपा
अवश्चरन् परो अन्येन पश्यन् ॥ ६-९-३

१२. य ईम् चिकेत गुहा भवन्तम्
आ यः ससाद धाराम् ऋतस्य
वि ये चृतन्ति ऋता सपन्त
आद् इद् वसूनि प्र ववाच अस्मै ॥ १-६७-४

१३. यस्तु सर्वाणि भूतानि
आत्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानम्
ततो न विजुगुप्सते ॥ यजु. ४०-६

१४. यस्मिन् सर्वाणि भूतानि
आत्मैवाअभूद् विजानतः ।
तत्र कः शोकः को मोह
एकत्वम् अनुपश्यतः ॥ यजु. ४०-७

१५. अचित्ती यच्चकृमा दैव्ये जने
दीनैः दक्षैः प्रभूती पुरुषत्वता ।
देवेषु च सवितर्मानुषेषु च
त्वं नो अत्र सुवतादनागसः ॥ ४-५४-३

१६. न स स्वो दक्षो वरुण ध्रुतिः सा
सुरा मन्युर् विभीदको अचित्तिः ।
अस्ति ज्यायान् कनीयस उपारे
स्वप्नश्चनेदनृतस्य प्रयोता ॥ ७-८६-६

१७. द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परि षस्वजाते ।
तयोरन्यः पिप्पलं स्वादु अत्ति
अनश्नन्नन्यो अभि चाकशीति ॥ १-१६४-२०

१८. अपाङ् प्राङ् एति स्वधया गृभीतः
अमर्त्यो मर्त्येनासयोनिः ।
ता शश्वन्ता विषूचीना वियन्त
नि अन्यं चिक्युर् न नि चिक्युरन्यम् ॥ १-१६४-३८

१९. अक्षेत्रविद् क्षेत्रविदं ह्यप्राट्
स प्रैति क्षेत्रविदानुशिष्टः ।
एतद्वै भद्रमनुशासनस्य
उत स्तुतिं विन्दत्यञ्जसीनाम् ॥ १०-३२-७

२०. तमित्पृच्छन्ति न सिमो विपृच्छन्ति
स्वेनेव धीरो मनसा यदग्रभीत् ।
न मृष्यते प्रथमं नापरं वचः
अस्य क्रत्वा सचते अप्रदृपितः ॥ १-१४५-२

२१. क्रतूयन्ति क्रतवो हृत्सु धीतयो
वेनन्ति वेनाः पतयन्त्यादिशः ।
न मर्डिता विद्यते अन्य एभ्यः
देवेषु मे अधि कामा अयंसत ॥ १०-६४-२

२२. ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधि विश्वे निषेदुः ।
यस् तन् न वेद किम् ऋचा करिष्यति
य इत् तद् विदुस्त इमे समासते ॥ १-१६४-३९

२३. वेदाहम् एतं पुरुषं महान्तम्
आदित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वा अति मृत्युम् एति
नान्यः पन्था विद्यते अयनाय ॥ यजु. ३१-१८

२४. अपाम सोमम् अमृता अभूम
अगन्म ज्योतिर् अविदाम देवान् ।
किं नूनम् अस्मान् कृणवद् अरातिः
किम् उ धूर्तिर् अमृत मर्त्यस्य ॥ ८-४८-३

२५. अन्तरिक्षेण पतति
विश्वा रूपावचाकशत् ।
मुनिर् देवस्य देवस्य
सौकृत्याय सखा हितः ॥ १०-१३६-४

२६. यत्र आनन्दाश्च मोदाश्च
मुदः प्रमुदः आसते ।
कामस्य यत्राप्ताः कामाः
तत्र माम् अमृतं कृधि ॥ ९-११३-११

# पञ्चमी ।

## इन्द्रभूतिः

१. प्र सु स्तोमं भरत वाजयन्त
इन्द्राय सत्यं यदि सत्यमस्ति ।
नेन्द्रो अस्तीति नेम उ त्व आह
क ईं ददर्श कम् अभिष्टवाम ॥ ८-१००-३

२. यो जात एव प्रथमो मनस्वान्
देवो देवान् क्रतुना पर्यभूषत् ।
यस्य शुष्माद् रोदसी अभ्यसेताम्
नृम्णस्य मह्ना स जनास इन्द्रः ॥ २-१२-१

३. यः पृथिवीं व्यथमानाम् अदृंहत्
यः पर्वतान् प्रकुपिताँ अरम्णात् ।
यो अन्तरिक्षं विममे वरीयो
यो द्याम् अस्तभ्नात्स जनास इन्द्रः ॥ २-१२-२

४. यो हत्वाहिमरिणात्सप्त सिन्धून्
यो गा उदाजद् अपधा बलस्य ।
यो अश्मनोरन्तरग्निं जजान
संवृक् समत्सु स जनास इन्द्रः ॥ २-१२-३

५. येनेमा विश्वा च्यवना कृतानि
यो दासं वर्णमधरं गुहा अकः ।
श्वघ्नीव यो जिगीवां लक्षमादद्
अर्यः पुष्टानि स जनास इन्द्रः ॥ २-१२-४

६. यं स्मा पृच्छन्ति कुह सेति घोरम्
उतेमाहुर् नैषो अस्ति इत्येनम् ।
सो अर्यः पुष्टीर्विज इवामिनाति
श्रद् अस्मै धत्त स जनास इन्द्रः ॥ २-१२-५

७. यो रध्रस्य चोदिता यः कृशस्य
यो ब्रह्मणो नाधमानस्य कीरेः ।
युक्तग्राव्णो योऽविता सुशिप्रः
सुतसोमस्य स जनास इन्द्रः ॥२-१२-६

८. यस्याश्वासः प्रदिशि यस्य गावः
यस्य ग्रामा यस्य विश्वे रथासः ।
यः सूर्यं य उषसं जजान
यो अपां नेता स जनास इन्द्रः ॥ २-१२-७

९ यं क्रन्दसी संयती विह्वयेते
परेऽवरे उभया अमित्राः ।
समानं चिद्रथमातस्थिवांसा
नाना हवंते स जनास इन्द्रः ॥ २-१२ ८

१०. यस्मान्न ऋते विजयन्ते जनासो
यं युध्यमाना अवसे हवन्ते
यो विश्वस्य प्रतिमानं बभूव
यो अच्युतच्युत्स जनास इन्द्रः ॥ २-१२-९

११. यः शश्वतो मह्येनो दधानान्
अमन्यमानान् शर्वा जघान ।
यः शर्धते नानुददाति शृध्याम्
यो दस्योर्हन्ता स जनास इन्द्रः ॥ २-१२-१०

१२. यः शम्बरं पर्वतेषु क्षियन्तम्
चत्वारिंश्याम् शरदि अन्वविन्दत् ।
ओजायमानं यो अहिं जघान
दानुं शयानं स जनास इन्द्रः ॥ २-१२-११

१३. यः सप्तरश्मिर्वृषभस्तुविष्मान्
अवासृजन् सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद् वज्रबाहुर्
द्याम् आरोहन्तं स जनास इन्द्रः ॥ २-१२-१२

१४. द्यावा चिदस्मै पृथिवी नमेते
शुष्माद् चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुर्
यो वज्रहस्तः स जनास इन्द्रः ॥ २-१२-१३

१५. यः सुन्वन्तमवति यः पचन्तम्
यः शंसन्तम् यः शशमानमूती ।
यस्य ब्रह्म वर्धनं यस्य सोमो
यस्येदं राधः स जनास इन्द्रः ॥ २-१२-१४

१६. यं वृत्रेषु क्षितयः स्पर्धमानाः
यं युक्तेषु तुरयन्तो हवन्ते ।
यं शूरसातौ यम् अपाम् उपज्मन्
यं विप्रासो वाजयन्ते स इन्द्रः ॥ साम. पू. ४-१-५-६

१७. यः सुन्वते पचते दुध्र आ चिद्
राजं दर्दर्षि स किलासि सत्यः ।
वयं त इन्द्र विश्वह प्रियासः
सुवीरासो विदथमा वदेम ॥ २-१२-१५

१८. य एक इच्च्यावयति प्र भूमा
राजा कृष्टीनां पुरुहूत इन्द्रः ।
सत्यमेनमनु विश्वे मदन्ति
रातिं देवस्य गृणतो मघोनः ॥ ४-१७-५

१९. न यं जरन्ति शरदो न मासा
न द्याव इन्द्रमवकर्शयन्ति ।
वृद्धस्य चिद् वर्धतामस्य तनूः
स्तोमेभिरुक्थैश्च शस्यमाना ॥ ६-२४-७

२०. इन्द्रं परेऽवरे मध्यमास
इन्द्रं यान्तोऽवसिताश इन्द्रम् ।
इन्द्रं क्षियन्त उत युध्यमाना
इन्द्रं नरो वाजयन्तो हवन्ते ॥ ४-२५-८

२१. महाँ असि महिष वृष्ण्येभिर्
धनस्पृदुग्र सहमानो अन्यान् ।
एको विश्वस्य भुवनस्य राजा
स योधया च क्षयया च जनान् ॥ ३-४६-२

२२. स रायस्खामुप सृजा गृणानः
पुरुश्चन्द्रस्य त्वमिन्द्र वस्वः ।
पतिर्बभूथ असमो जनानाम्
एको विश्वस्य भुवनस्य राजा ॥ ६-३६-४

२३. त्रातारमिन्द्रमवितारमिन्द्रम्
हवेहवे सुहवं सूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रम्
स्वस्ति नो मघवा धात्विन्द्रः ॥ ६-४७-११

२४. त्वं विश्वा दधिषे केवलानि
यानि आविर्या च गुहा वसूनि ।
काममिन्मे मघवन्मा वि तारीस्
त्वम् आज्ञाता त्वमिन्द्रासि दाता ॥ १०-५४-५

२५. धृतव्रतो धनदाः सोमवृद्धः
स हि वामस्य वसुनः पुरुक्षुः ।
सं जग्मिरे पथ्या रायो अस्मिन्
समुद्रे न सिन्धवो यादमानाः ॥ ६-१९-५

२६. इन्द्रो दिव इन्द्र ईशे पृथिव्या
इन्द्र अपामिन्द्र इत्पर्वतानाम् ।
इन्द्रो वृधामिन्द्र इन्मेधिराणाम्
इन्द्रः क्षेमे योगे हव्य इन्द्रः ॥ १०-८९-१०

२७. प्राक्तुभ्य इन्द्रः प्र वृधो अहभ्यः
प्रान्तरिक्षात्प्र समुद्रस्य धासेः ।
प्र वातस्य प्रथसः प्रज्मो अन्तान्
प्रसिन्धुभ्यो रिरिचे प्र क्षितिभ्यः ॥ १०-८९-११

२८. नहि त्वा शूरो न तुरो न धृष्णुर्
न त्वा योधो मन्यमानो युयोध ।
इन्द्र नकिष्ट्वा प्रति-अस्ति-एषाम्
विश्वा जातानि अभ्यसि तानि ॥ ६-२५-५

२९. एकं नु त्वा सत्पतिं पाञ्चजन्यम्
जातं शृणोमि यशसं जनेषु ।
तं मे जगृभ्र आशसो नविष्ठम्
दोषावस्तोर्हवमानास इन्द्रम् ॥ ५-३२-११

३०. यस्य त्री पूर्णा मधुना पदानि
अक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्याम्
एको दाधार भुवनानि विश्वा ॥ १-१५४-४

३१. किमित्ते विष्णो परिचक्ष्यं भूत्
प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्
यदन्यरूपः समिथे बभूथ ॥ ७-१००-६

३२. रूपं रूपं प्रतिरूपो बभूव
तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते
युक्ता हि अस्य हरयः शता दश ॥ ६-४७-१८

३३. परा पूर्वेषां सख्या वृणक्ति
वितर्तुराणो अपरेभिरेति ।
अनानुभूतीरवधून्वानः
पूर्वीरिन्द्रः शरदस्तर्तरीति ॥ ६-४७-१७

३४. यद्चरस्तन्वा वावृधानो
बलानीन्द्र प्रबुवाणो जनेषु ।
मायेत्सा ते यानि युद्धानि आहुर्
नाद्य शत्रुं ननु पुरा विवित्से ॥ १०-५४-२

३५. ता कर्म अपतर अस्मै
प्र च्यौत्नानि देवयन्तो भरन्ते ।
जुजोषदिन्द्रो दस्मवर्चा
नासत्येव सुग्म्यो रथेष्ठाः ॥ १-१७३-४

३६. उतो घा ते पुरुष्या इदासन्
येषाम् पूर्वेषामशृणोर्ऋषीणाम्
अधाहं त्वां मघवञ्जोहवीमि
त्वं न इन्द्रासि प्रमतिः पितेव ॥ ७-२९-४

३७. अयमस्मि जरितः पश्य मेह
विश्वा जातानि अभ्यस्मि मह्ना ।
ऋतस्य मा प्रदिशो वर्धयन्ति
आ दर्दिरो भुवना दर्दरीमि ॥ ८-१००-४

३८. नकिरिन्द्र त्वदुत्तरो
न ज्यायान् अस्ति वृत्रहन् ।
नकिर् एवा यथा त्वम् ॥ ४-३०-१

३९. ऋषिर्हि पूर्वजा असि एक ईशान ओजसा ।
इन्द्र चोष्कूयसे वसु ॥ ८-६-४१

४०. यत इन्द्र भयामहे ततो नो अभयं कृधि ।
विद्विषो वि मृधो जहि ॥ ८-६१-१३

४१. त्वयेदिन्द्र युजा वयम्
प्रति ब्रवीमहि स्पृधः ।
त्वम् अस्माकम् तव स्मसि ॥ ८-९२-३२

४२. यदिन्द्र यावतस्त्वम्
एतावदहमीशीय ।
स्तोतारमिद्दिधिषेय ॥ ७-३२-१८

७. न तमंहो न दुरितानि मर्त्यम्
इन्द्रावरुणा न तपः कुतश्चन ।
यस्य देवा गच्छथो वीथो अध्वरम्
न तं मर्त्यस्य नशते परिह्वृतिः ॥ ७-८२-७

८. अर्वाङ्नरा दैव्येनावसा गतं
शृणुतं हवं यदि मे जुजोषथः ।
युवोर्हि सख्यमुत वा यदाप्यम्
मार्डीकमिन्द्रावरुणा नि यच्छतम् ॥ ७-८२-८

९. अस्माकम् इन्द्रावरुणा भरेभरे
पुरोयोधा भवतं कृष्टि ओजसा ।
यद्वां हवन्त उभये अध स्पृधि
नरस्तोकस्य तनयस्य सातिषु ॥ ७-८२-९

१०. यत्रा नरः समयन्ते कृतध्वजो
यस्मिन्नाजा भवति किं चन प्रियम् ।
यत्रा भयन्ते भुवना स्वर्दृशस्
तत्रा न इन्द्रावरुणा अधि वोचतम् ॥ ७-८३-२

११. आपश्चिद्धि स्वयशसः सदःसु
देवीरिन्द्रं वरुणं देवता धुः ।
कृष्टीरन्यो धारयति प्रविक्ता
वृत्राणि अन्यो अप्रतीनि हन्ति ॥ ७-८५-३

१२. वृत्राणि अन्यः समिथेषु जिघ्नते
व्रतानि अन्यो अभि रक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभिः
अस्मे इन्द्रावरुणा शर्म यच्छतम् ॥ ७-८३-९

१३. ता गृणीहि नमस्येभिः शूषैः
सुम्नेभिरिन्द्रावरुणा चकाना ।
वज्रेणान्यः शवसा हन्ति वृत्रम्
सिषक्ति अन्यो वृजनेषु विप्रः ॥ ६-६८-३

१४. जुषेथां यज्ञं बोधतम् हवस्य मे
सत्तो होता निविदः पूर्व्या अनु ।
अच्छा राजाना नम एत्यावृतम्
प्रशास्त्राद् आ पिबतं सोम्यं मधु ॥ २-३६-६

१५. युवोर्ऋतं रोदसी सत्यमस्तु
महे षु णः सुविताय प्र भूतम् ।
इदं दिवे नमो अग्ने पृथिव्यै
सपर्यामि प्रयसा यामि रत्नम् ॥ ३-५४-३

१६ स सुक्रतुर्ऋतचिदस्तु होता
य आदित्य शवसा वां नमस्वान् ।
आववर्तद् अवसे वां हविष्मान्
असदित् स सुविताय प्रयस्वान् ॥ ७-८५-४

१७. अमूरा विश्वा वृषणाविमा वाम्
न यासु चित्रम् ददृशे न यक्षम् ।
द्रुहः सचन्ते अनृता जनानाम्
न वां निण्यान्यचिते अभूवन् ॥ ७-६१-५

१८. इयं देव पुरोहितिर्युवभ्याम्
यज्ञेषु मित्रावरुणाव् अकारि ।
विश्वानि दुर्गा पिपृतं तिरो नो
यूयं पात स्वस्तिभिः सदा नः ॥ ७-६०-१२

१९. ऋतस्य गोपाव् अधितिष्ठथो रथम्
सत्यधर्माणा परमे व्योमनि ।
यमत्र मित्रावरुणावथो युवम्
तस्मै वृष्टिर्मधुमत्पिन्वते दिवः ॥ ५-६३-१

२०. ऋतस्य बुध्न उपसामिषण्यन्
वृषा मही रोदसी आ विवेश ।
मही मित्रस्य वरुणस्य माया
चन्द्रेव भानुम् वि दधे पुरुत्रा ॥ ३-६१-७

२१. धर्मणा मित्रावरुणा विपश्चिता
व्रता रक्षेथे असुरस्य मायया ।
ऋतेन विश्वम् भुवनं वि राजथः
सूर्यम् आ धत्थो दिवि चित्र्यम् रथम् ॥ ५-६३-७

२२. इमां वां मित्रावरुणा सुवृक्तिम्
इषं न कृण्वे असुरा नवीयः ।
इनो वामन्यः पदवीरदब्धो
जनं च मित्रो यतति ब्रुवाणः ॥ ७-३६-२

२३. ता भूरिपाशावनृतस्य सेतू
दुरत्येतू रिपवे मर्त्याय ।
ऋतस्य मित्रावरुणा पथा वाम्
अपो न नावा दुरिता तरेम ॥ ७-६५-३

२४. युवं वस्त्राणि पीवसा वसाथे
युवोरच्छिद्रा मन्तवो ह सर्गाः ।
अवातिरतमनृतानि विश्व
ऋतेन मित्रावरुणा सचेथे ॥ १-१५२-१

२५. युवो राष्ट्रं बृहदिन्वति द्यौर्
यौ सेतृभिररज्जुभिः सिनीथः ।
परि नो हेळो वरुणस्य वृज्या
उरुं न इन्द्रः कृणवदु लोकम् ॥ ७-८४-२

२६. अपादेति प्रथमा पद्वतीनाम्
कस्तद्वाम् मित्रावरुणा चिकेत ।
गर्भो भारं भरति आ चिदस्य
ऋतं पिपर्ति अनृतं नि तारीत् ॥ १-१५२-३

२७. प्रति वां सूर उदिते सूक्तैर्
मित्रं हुवे वरुणं पूतदक्षम् ।
ययोरसुर्यमक्षितम् ज्येष्ठम्
विश्वस्य यामन्नाचित्ता जिगत्नु ॥ ७-६५-१

२८. मित्राय शिक्ष वरुणाय दाशुषे
या सम्राजा मनसा न प्रयुच्छतः ।
ययोर्धाम धर्मणा रोचते बृहद्
ययोर् उभे रोदसी नाधसी वृतौ ॥ १०-६५-५

२९. समानं नीळं वृषणो वसानाः
सं जग्मिरे महिषा अर्वतीभिः ।
ऋतस्य पदं कवयो नि पान्ति
गुहा नामानि दधिरे पराणि ॥ १०-५-२

३०. ता हि देवानाम् असुरा तावर्या
ता नः क्षितीः करतमूर्जयन्तीः ।
अश्याम मित्रावरुणा वयम् वाम्
द्यावा च यत्र पीपयन्नहा च ॥ ७-६५-२

३१. तमु ष्टवाम य इमा जजान
विश्वा जातानि अवराणि अस्मात् ।
इन्द्रेण मित्रं दिधिषेम गीर्भिर्
उपो नमोभिर्वृषभं विशेम ॥ ८-९६-६

३२. अयं मित्रो नमस्यः सुशेवो
राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयं सुमतौ यज्ञियस्य
अपि भद्रे सौमनसे स्याम ॥ ३-५९-४

३३. विदुष्टे विश्वा भुवनानि तस्य
ता प्र ब्रवीषि वरुणाय वेधः ।
त्वं वृत्राणि शृण्विषे जघन्वान्
त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥ ४-४२-७

## अष्टमी ।

### अश्विनौ

१. आ नो रत्नानि बिभ्रताव्
अश्विना गच्छतम् युवम् ।
रुद्रा हिरण्यवर्तनी
जुषाणा वाजिनीवसू ॥ ५-७५-३

२. आ नो देवेभिरुपयातमर्वाक्
सजोषसा नासत्या रथेन ।
युवोर्हि नः सख्या पित्र्याणि
समानो बन्धुरुत तस्य वित्तम् ॥ ७-७२-२

३. मध्व ऊ षु मधूयुवा
रुद्रा सिषक्ति पिप्युषी ।
यत् समुद्राति पर्षथः
पक्वाः पृक्षो भरन्त वाम् ॥ ५-७३-८

४. आ पश्चातात् नासत्या पुरस्ताद्
आ अश्विना यातमधराद् उदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया
यूयं पात स्वस्तिभिः सदा नः ॥ ७-७२-५

५. युवोर्दानाय सुभरा असश्चतो
रथमा तस्थुर्वचसं न मन्तवे ।
याभिर्धियो अवथः कर्मन्निष्टये
ताभिरू षु ऊतिभिरश्विना गतम् ॥ १-११२-२

६. युवं तासां दिव्यस्य प्रशासने
विशां क्षयथो अमृतस्य मज्मना ।
याभिर्धेनुमस्वं पिन्वथो नरा
ताभिरू षु ऊतिभिरश्विना गतम् ॥ १-११२-३

७. यवं वृकेणाश्विना वपन्ता
इषं दुहन्ता मनुषाय दस्रा ।
अभि दस्युम् बकुरेणा धमन्ता
उरुम् ज्योतिश्चक्रथुरार्याय ॥ १-११७-२१

८. आ न ऊर्जं वहतमश्विना युवम्
मधुमत्या नः कशया मिमिक्षतम् ।
प्रायुस्तारिष्टम् नी रपांसि मृक्षतम्
सेधतं द्वेषो भवतं सचाभुवा ॥ १-१५७-४

९. युवं ह गर्भं जगतीषु धत्थो
युवं विश्वेषु भुवनेषु अन्तः ।
युवमग्निं च वृषणावपश्च
वनस्पतींरश्विनावैरयेथाम् ॥ १-१५७-५

१०. युवं ह स्थो भिषजा भेषजेभिर्
अथो ह स्थो रथ्या राथ्येभिः ।
अथो ह क्षत्रमधि धत्थ उग्रा
यो वां हविष्मान्मनसा ददाश ॥ १-१५७-६

११. वसू रुद्रा पुरुमन्तू वृधन्ता
दशस्यतम् नो वृषणावभिष्टौ ।
दस्रा ह यद् रेक्ण औचथ्यो वाम्
प्र यत् सस्राथे अकवाभिरूती ॥ १-१५८-१

१२. इहेह जाता समवावशीताम्
अरेपसा तन्वा नामभिः स्वैः ।
जिष्णुर्वामन्यः सुमखस्य सूरिर्
दिवो अन्यः सुभगः पुत्र ऊहे ॥ १-१८१-४

१३. अमाजुरश्चिद्भवथो युवं भगो
अनाशोश्चिदवितारा अपमस्य चित् ।
अन्धस्य चिन्नासत्या कृशस्य चित्
युवामिदाहुर्भिषजा रुतस्य चित् ॥ १०-३९-३

१४. कं याथः कम् ह गच्छथ
कमच्छा युञ्जाथे रथम् ।
कस्य ब्रह्माणि रण्यथो
वयं वामुश्मसीष्टये ॥ ५-७४-३

१५. इन्द्रतमा हि धिष्ण्या मरुत्तमा
दस्रा दंसिष्ठा रथ्या रथीतमा ।
पूर्णं रथं वहेथे मध्व आचितम्
तेन दाश्वांसमुप याथो अश्विना ॥ १-१८२-२

१६. किमत्र दस्रा कृणुथः किमासाथे
जनो यः कश्चिदहविर्महीयते ।
अति क्रमिष्टम् जुरतं पणेरसुम्
ज्योतिर्विप्राय कृणुतं वचस्यवे ॥ १-१८२-३

१७. शृङ्गेव नः प्रथमा गन्तमर्वाक्
शफाविव जर्भुराणा तरोभिः ।
चक्रवाकेव प्रति वस्तोरुस्रा
अर्वाञ्चा यातम् रथ्येव शक्रा ॥ २-३९-३

१८. रातेवार्जुया नद्येव रीतिर्
अक्षी इव चक्षुषा यातमर्वाक् ।
हस्ताविव तन्वे शम्भविष्ठा
पादेव नो नयतं वस्यो अच्छ ॥ २-३९-५

१९. सुयुग् वहन्ति प्रति वामृतेन
उर्ध्वा भवन्ति पितरेव मेधाः ।
जरेथामस्मद्विपणेर्मनीषाम्
युवोरवश्चकृमा यातमर्वाक् ॥ ३-५८-२

२०. पुराणमोकः सख्यं शिवं वाम्
युवोर्नरा द्रविणम् जह्नाव्याम् ।
पुनः कृण्वानाः सख्या शिवानि
मध्वा मदेम सह नू समानाः ॥ ३-५८-६

# नवमी ।

## एकासुरत्वम्

१. उषसः पूर्वा अध यद् वि ऊषुर्
महद् विजज्ञे अक्षरं पदे गोः ।
व्रता देवानामुप नु प्रभूषन्
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१

२. मो षू णो अत्र जुहुरन्त देवा
मा पूर्वे अग्ने पितरः पदज्ञाः ।
पुराण्योः सद्मनोः केतुरन्तर्
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-२

३. वि मे पुरुत्रा पतयन्ति कामाः
शम्य् अच्छा दीद्ये पूर्व्याणि ।
समिद्धे अग्नावृतमिद्वदेम
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-३

४. समानो राजा विभृतः पुरुत्रा
शये शयासु प्रयुतो वनानु ।
अन्या वत्सं भरति क्षेति माता
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-४

५. आक्षित् पूर्वासु अपरा अनूरुत्
सद्यो जातासु तरुणीषु अन्तः ।
अन्तर्वतीः सुवते अप्रवीता
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-५

६. शयुः परस्तादध नु द्विमाता
अबन्धनश्चरति [illegible]
मित्रस्य ता वरुणस्य [illegible]
महद् देवानाम् [illegible] ॥ ३-५५-६

७. द्विमाता होता विदथेषु सम्राट्
अनु अग्रं चरति क्षेति बुध्नः ।
प्र रण्यानि रण्यवाचो भरन्ते
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-७

८. शूरस्येव युध्यतो अन्तमस्य
प्रतीचीनं ददृशे विश्वमायत ।
अन्तर्मतिश्चरति निष्षिधं गोर्
महद् देवानाम् असुरत्वम एकम् ॥ ३-५५-८

९. नि वेवेति पलितो दूत आसु
अन्तर्महांश्चरति रोचनेन ।
वपूंषि बिभ्रदभि नो वि चष्टे
महद् देवानाम् असुरत्वम एकम् ॥ ३-५५-९

१०. विष्णुर्गोपाः परमं पाति पाथः
प्रिया धामानि अमृता दधानः ।
अग्निष्टा विश्वा भुवनानि वेद
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१०

११. नाना चक्राते यम्या वपूंषि
तयोरन्यद्रोचते कृष्णमन्यन् ।
श्यावी च यद् अरुषी च स्वसारौ
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-११

१२. माता च यत्र दुहिता च धेनू
सबर्दुघे धापयेते समीची ।
ऋतस्य ते सदसीळे अन्तर्
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१२

१३. अन्यस्या वत्सं रिहती मिमाय
कया भुवा नि दधे धेनुरूधः ।
ऋतस्य सा पयसापिन्वतेळा
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१३

१४. पद्या वस्ते पुरुरूपा वपूंषि
ऊर्ध्वा तस्थौ त्र्यविं रेरिहाणा ।
ऋतस्य सद्म वि चरामि विद्वान्
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१४

१५. पदे इव निहिते दस्मे अन्तर्
तयोरन्यद्गुह्यमाविरन्यत् ।
सध्रीचीना पथ्या सा विषूची
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१५

१६. आ धेनवो धुनयन्तामशिश्वीः
सबर्दुघाः शशया अप्रदुग्धाः ।
नव्या नव्या युवतयो भवन्ति
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१६

१७. यद् अन्यासु वृषभो रोरवीति
सो अन्यस्मिन्यूथे नि दधाति रेतः ।
स हि क्षपावान्त्स भगः स राजा
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१७

१८. वीरस्य नु स्वश्व्यं जनासः
प्र नु वोचाम विदुरस्य देवाः ।
षोळ्हा युक्ताः पञ्चपञ्चा वहन्ति
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१८

१९. देवस्त्वष्टा सविता विश्वरूपः
पुपोष प्रजाः पुरुधा जजान ।
इमा च विश्वा भुवनानि अस्य
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-१९

२०. मही समैरच्चम्वा समीची
उभे ते अस्य वसुना न्यृष्टे ।
शृण्वे वीरो विन्दमानो वसूनि
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-२०

२१. इमां च नः पृथिवी विश्वधाया
उप क्षेति हितमित्रो न राजा।
पुरःसदः शर्मसदो न वीरा
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-२१

२२. निष्षिध्वरीस्त ओषधीरुतापो
रयिं त इन्द्र पृथिवी बिभर्ति।
सखायस्ते वामभाजः स्याम
महद् देवानाम् असुरत्वम् एकम् ॥ ३-५५-२२

२३. सुपर्णं विप्राः कवयो वचोभिर्
एकं सन्तं बहुधा कल्पयन्ति।
छन्दांसि च दधतो अध्वरेषु
ग्रहान्त्सोमस्य मिमते द्वादश ॥ १०-११४-५

२४. एकः सुपर्णः स समुद्रमा विवेश
स इदं विश्वं भुवनं वि चष्टे।
तं पाकेन मनसा अपश्यमन्तितस्
तम् माता रेळ्हि स उ रेळ्हि मातरम्॥ १०-११४-४

२५. एको बहूनामसि मन्यवीळितो
विशं विशं युधये सं शिशाधि।
अकृत्तरुक् त्वया युजा वयम्
द्युमन्तम् घोषम् विजयाय कृण्महे ॥ १०-८४-४

२६. वया इदग्ने अग्नयस्ते अन्ये
त्वे विश्वे अमृता मादयन्ते।
वैश्वानर नाभिरसि क्षितीनाम्
स्थूणेव जनान् उपमिद्यन्यथ ॥ १-५९-१

२७. त्वं वरुण उत मित्रो अग्ने
त्वां वर्धन्ति मतिभिर्वसिष्ठाः।
त्वे वसु सुषणनानि सन्तु
यूयं पात स्वस्तिभिः सदा नः ॥ ७-१२-३

२८. त्वमग्ने वरुणो जायसे यत्
त्वम् मित्रो भवसि यत्समिद्धः ।
त्वे विश्वे सहसस्पुत्र देवास्
त्वम् इन्द्रो दाशुषे मर्त्याय ॥ ५-३-१

२९. वि यद्वाचम् कीस्तासो भरन्ते
शंसन्ति के चिन् निविदो मनानाः ।
आद्वो भवाम सत्यानि उक्था
नकिर्देवेभिर्यतथो महित्वा ॥ ६-६७-१०

३०. त अज्येष्ठा अकनिष्ठास उद्भिदो
अमध्यमासो महसा वि वावृधुः ।
सुजातासो जनुषा पृश्निमातरो
दिवो मर्या आ नो अच्छा जिगातन ॥ ५-५९-६

३१. यो नः पिता जनिता यो विधाता
धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव
तम् सम्प्रश्नं भुवना यन्त्यन्या ॥ १०-८२-३

३२. इन्द्रं मित्रं वरुणमग्निमाहुर्
अथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद् विप्रा बहुधा वदन्ति
अग्निं यमं मातरिश्वानमाहुः ॥ १-१६४-४६

## दशमी ।

### रुद्रः

१. भुवनस्य पितरम् गीर्भिराभि
रुद्रम् दिवा वर्धया रुद्रमक्तौ ।
बृहन्तम् ऋष्वमजरम् सुषम्नम्
ऋधग्घुवेम कविनेषितासः ॥ ६-४९-१०

२. स्तोमं वो अद्य रुद्राय शिक्वसे
क्षयद्वीराय नमसा दिदिष्टन ।
येभिः शिवः स्ववाँ एवयावभिः
दिवः सिषक्ति स्वयशा निकामभिः ॥ १०-९२-९

३. त्वमस्य पारे रजसो व्योमनः
स्वभूति ओजा अवसे धृषन्मनः ।
चकृषे भूमिम् प्रतिमानम् ओजसो
अपः स्वः परिभूर् एषि आ दिवम् ॥ १-५२-१२

४. न यस्य द्यावापृथिवी अनु व्यचो
न सिन्धवो रजसो अन्तमानशुः ।
नोत स्ववृष्टिम् मदे अस्य युध्यत
एको अन्यच्चकृषे विश्वमानुषक् ॥ १-५२-१४

५. समेत विश्वे वचसा पतिम् दिवः
एको विभुर् अतिथिर् जनानाम् ।
स पूर्व्यो नूतनम् आ विवासत्
तम् वर्तनिर् अनुवावृत एकमिन् पुरु ॥ सा.पू.४-२-४-३

६. इमा रुद्राय स्थिरधन्वने गिरः
क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाळ्हाय सहमानाय वेधसे
तिग्मायुधाय भरता शृणोतु नः ॥ ७-४६-१

१४. अर्हन् बिभर्षि सायकानि धन्व
अर्हन् निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं
न वा ओजीयो रुद्र त्वदस्ति ॥ २-३३-१०

१५. हिरण्यहस्तो असुरः सुनीथः
सुमृळीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन् रक्षसो यातुधानान्
अस्थाद्देवः प्रतिदोषं गृणानः ॥ १-३५-१०

१६. हिरण्यपाणिः सविता विचर्षणिः
उभे द्यावापृथिवी अन्तरीयते ।
अपामीवां बाधते वेति सूर्यम्
अभि कृष्णेन रजसा द्यामृणोति ॥ १-३५-९

१७. तद्देवस्य सवितुर्वार्यं महद् ।
वृणीमहे असुरस्य प्रचेतसः ।
छर्दिर्येन दाशुषे यच्छति त्मना ।
तन्नो महाँ उदयान्देवो अक्तुभिः ॥ ४-५३-१

१८. सविता पश्चातात्सविता पुरस्तात् ।
सवितोत्तरात्तात् सविता अधरात्तात् ।
सविता नः सुवतु सर्वतातिम्
सविता नो रासतां दीर्घमायुः ॥ १०-३६-१४

१९. त्वेषं वयं रुद्रं यज्ञसाधम्
वंकुं कविमवसे नि ह्वयामहे ।
आरे अस्मद्दैव्यं हेळो अस्यतु
सुमतिमिद्वयमस्या वृणीमहे ॥ १-११४-४

२०. न स जीयते मरुतो न हन्यते
न स्रेधति न व्यथते न रिष्यति ।
नास्य राय उप दस्यन्ति नोतय
ऋषिं वा यं राजानं वा सुषूदथ ॥ ५-५४-७

२१. प्रपथे पथामजनिष्ट पूषा
प्रपथे दिवः प्रपथे पृथिव्याः ।
उभे अभि प्रियतमे सधस्थे
आ च परा च चरति प्रजानन् ॥ १०-१७-६

२२. य इमे द्यावापृथिवी जनित्री
रूपैरपिंशद् भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान्
देवं त्वष्टारमिह यक्षि विद्वान् ॥ १०-११०-९

२३. कथा कविस्तुवीरवान्कया गिरा
बृहस्पतिर्वावृधते सुवृक्तिभिः ।
अज एकपात्सुहवेभिर्ऋक्वभिर्
अहिः शृणोतु बुध्न्यो हवीमनि ॥ १० ६४-४

२४. ब्रह्म गामश्वं जनयन्त ओषधीर्
वनस्पतीन् पृथिवीं पर्वताँ अपः ।
सूर्यं दिवि रोहयन्तः सुदानव
आर्या व्रता विसृजन्तो अधि क्षमि ॥ १०-६५-११

२५. त्वमग्ने रुद्रो असुरो महो दिवस्
त्वं शर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शंगयस्
त्वं पूषा विधतः पासि नु त्मना ॥ २-१-६

२६. मेधाकारं विदथस्य प्रसाधनम्
अग्निं होतारं परिभूतमम् मतिम् ।
तमिदर्भे हविष्या समानमित्
तम् इन्महे वृणते नान्यं त्वत् ॥ १०-९१ ८

२७. प्र रुद्रेण ययिना यन्ति सिन्धवस्
तिरो महीमरमतिं दधन्विरे ।
येभिः परिज्मा परियन्नुरु ज्रयो
वि रोरुवज्जठरे विश्वमुक्षते ॥ १०-९२-५

२८. स्थिरेभिरङ्गैः पुरुरूप उग्रो
बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।
ईशानादस्य भुवनस्य भूरेर्
न वा उ योषद्रुद्रादसुर्यम् ॥ २-३३-९

२९. इदा हि ते वेविषतः पुराजाः
प्रत्नास आसुः पुरुकृत्सखायः ।
ये मध्यमास उत नूतनास
उतावमस्य पुरुहूत बोधि ॥ ६-२१-५

३०. देवानां माने प्रथमा अतिष्ठन्
कृन्तत्रादेषामुपरा उदायन् ।
त्रयस्तपन्ति पृथिवीमनूपा
द्वा बृबूकं वहतः पुरीषम् ॥ १०-२७-२३

३१. मा नो वधी रुद्र मा परा दा
मा ते भूम प्रसितौ हीळितस्य ।
आ नो भज बर्हिषि जीवशंसे ।
यूयं पात स्वस्तिभिः सदा नः ॥ ७-४६-४

३२. कद्रुद्राय प्रचेतसे
मीळ्हुष्टमाय तव्यसे ।
वोचेम शन्तमं हृदे ॥ १-४१-१

३३. यथा नो मित्रोवरुणो ।
यथा रुद्रश्चिकेतति ।
यथा विश्वे सजोषसः ॥ १-४३-३

## एकादशी ।

### हविषा विधानम्

१. हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीम् द्यामुतेमाम्
कस्मै देवाय हविषा विधेम ॥ १०-१२१-१

२. य आत्मदा बलदा यस्य विश्व
उपासते प्रशिषं यस्य देवाः ।
यस्यच्छायामृतम् यस्य मृत्युः
कस्मै देवाय हविषा विधेम ॥ १०-१२१-२

३. यः प्राणतो निमिषतो महित्वा
एक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः
कस्मै देवाय हविषा विधेम ॥ १०-१२१-३

४. यस्य इमे हिमवन्तो महित्वा
यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू
कस्मै देवाय हविषा विधेम ॥ १०-१२१-४

५. येन द्यौरुग्रा पृथिवी च दृळ्हा
येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः
कस्मै देवाय हविषा विधेम ॥ १०-१२१-५

६. यं क्रन्दसी अवसा तस्तभाने
अभ्यैक्षेताम् मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति
कस्मै देवाय हविषा विधेम ॥ १०-१२१-६

७. आपो ह यद् बृहतीर्विश्वमायन्
गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः
कस्मै देवाय हविषा विधेम ॥ १०-१२१-७

८. यश्चिदापो महिना पर्यपश्यद्
दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्
कस्मै देवाय हविषा विधेम ॥ १०-१२१-८

९. मा नो हिंसीज्जनिता यः पृथिव्याः
यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान
कस्मै देवाय हविषा विधेम ॥ १०-१२१-९

१०. आत्मा देवानां भुवनस्य गर्भो
यथावशं चरति देव एषः ।
घोषा इदस्य शृण्विरे न रूपम्
तस्मै वाताय हविषा विधेम ॥ १०-१६८-४

११. प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणाम् ॥ १०-१२१-१०

१२. कथा कदस्या उषसो नि उष्टौ
देवो मर्तस्य सख्यम् जुजोष ।
कथा कदस्य सख्यम् सखिभ्यो
ये अस्मिन्कामं सुयुजं ततस्रे ॥ ४-२३-५

१३. को नानाम वचसा सोम्याय
मनायुर्वा भवति वस्त उस्राः ।
क इन्द्रस्य युज्यम् कः सखित्वम्
को भ्रात्रं वष्टि कवये क ऊती ॥ ४-२५-२

१४. त्वामग्ने पितरमिष्टिभिर्
नरस्त्वां भ्रात्राय शम्या तनूरुचम् ।
त्वं पुत्रो भवसि यस्ते अविधत्
त्वं सखा सुशेवः पास्याधृषः ॥ २-१-९

१५. वास्तोष्पते प्रतरणो न एधि
गयस्फानो गोभिरश्वेभिरिन्दो ।
अजरासस्ते सख्ये स्याम
पितेव पुत्रान्प्रति नो जुषस्व ॥ ७-५४-२

१६. अग्निम् मन्ये पितरमग्निमापिम्
अग्निं भ्रातरं सदमित्सखायम् ।
अग्नेरनीकं बृहतः सपर्यम्
दिवि शुक्रं यजतं सूर्यस्य ॥ १०-७-३

१७. पश्चात्पुरस्ताद् अधरादुदक्तात्
कविः काव्येन परि पाहि राजन् ।
सखे सखायमजरो जरिम्णे
अग्ने मर्त्यान् अमर्त्यस्त्वं नः ॥ १०-८७-२१

१८. आ हि ष्मा सूनवे पिता
आपिर्यजत्यापये
सखा सख्ये वरेण्यः ॥ १-२६-३

१९. यदग्ने स्यामहं त्वम्
त्वम् वा घा स्या अहम्
स्युष्टे सत्या इहाशिषः ॥ ८-४४-२३

२०. य आपिर्नित्यो वरुण प्रियः सन्
त्वामागांसि कृणवत्सखा ते ।
मा त एनस्वन्तो यक्षिन्भुजेम
यन्धि ष्मा विप्रः स्तुवते वरूथम् ॥ ७-८८-६

# द्वादशी ।

## विराट्

१. सहस्रशीर्षा पुरुषः
सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा
अत्यतिष्ठद्दशाङ्गुलम् ॥ १०-९०-१

२. पुरुष एव इदं सर्वम्
यद् भूतम् यच्च भव्यम् ।
उतामृतत्वस्येशानो
यदन्नेनातिरोहति ॥ १०-९०-२

३. एतावानस्य महिमा
अतो ज्यायांश्च पूरुषः ।
पादोस्य विश्वा भूतानि
त्रिपादस्यामृतं दिवि ॥ १०-९०-३

४. त्रिपादूर्ध्व उदैत्पुरुषः
पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्
साशनानशने अभि ॥ १०-९०-४

५. तस्माद्विराळजायत
विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत
पश्चाद् भूमिमथो पुरः ॥ १०-९०-५

६. यत्पुरुषेण हविषा
देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यम्
ग्रीष्म इध्मः शरद्धविः ॥ १०-९०-६

७. तं यज्ञम् बर्हिषि प्रौक्षन
पुरुषं जातमग्रतः ।
तेन देवा अयजन्त
साध्या ऋषयश्च ये ॥ १०-९०-७

८. तस्माद्यज्ञात सर्वहुतः
सम्भृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यान्
आरण्यान् ग्राम्याश्च ये ॥ १०-९०-८

९. तस्माद्यज्ञात् सर्वहुतः
ऋचः सामानि जज्ञिरे ।
छन्दांसि यज्ञिरे तस्माद्
यजुस्तस्मादजायत ॥ १०-९० ९

१०. तस्मादश्वा अजायन्त
ये के च उभयादतः
गावो ह जज्ञिरे तस्मात्
तस्माज्जाता अजावय ॥ १०-९०-१०

११. यत्पुरुषं वि अदधुः
कतिधा व्यकल्पयन् ।
मुखम् किमस्य कौ बाहू
का ऊरू पादा उच्येते ॥ १० ९०-११

१२. ब्राह्मणो अस्य मुखमासीत्
बाहू राजन्य कृतः ।
ऊरू तदस्य यद्वैश्य
पद्भ्याम् शूद्रो अजायत ॥ १०-९०-१२

१३. चन्द्रमा मनसो जातश्
चक्षो. सूर्यो अजायत ।
मुखादिन्द्रश्च अग्निश्च
प्राणाद्वायुरजायन ॥ १०-९०-१३

१४. नाभ्या आसीत् अन्तरिक्षम्
शीर्ष्णो द्यौः समवर्तत ।
पद्भ्याम् भूमिर्दिशः श्रोत्रान्
तथा लोकान अंकल्पयन् ॥ १०-९०-१४

१५. सप्तास्यासन्परिधयस्
त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना
अबध्नन्पुरुषम् पशुम् ॥ १०-९०-१५

१६. सर्वे निमेषा जज्ञिरे
विद्युतः पुरुषादधि ।
नैनमूर्ध्वं न तिर्यञ्चम्
न मध्ये परिजग्रभन् ॥ यजु. ३२-२

१७. य इमा विश्वा भुवनानि जुह्वन्
ऋषिर्होता न्यसीदत्पिता नः ।
स आशिषा द्रविणमिच्छमानः
प्रथमच्छदवरान् आ विवेश ॥ १०-८१-१

१८. प्रजापतिश्चरति गर्भे अन्तर्
अजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्
तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥ यजु. ३१-१९

१९. रूपंरूपं मघवा बोभवीति
मायाः कृण्वानस्तन्वं परि स्वाम् ।
त्रिर्यद् दिवः परि मुहुर्तमागात्
स्वैर्मन्त्रैरनृतुपा ऋतावा ॥ ३-५३-८

२०. विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोबाहुरुत विश्वतस्पात् ।
संबाहुभ्यां धमति सं पतत्रैर्
द्यावाभूमी जनयन्देव एकः ॥ १०-८१-३

२१. त्रिरस्य ता परमा सन्ति सत्या
स्पार्हा देवस्य जनिमान्यग्नेः ।
अनन्ते अन्तः परिवीत आगाच्
छुचिः शुक्रो अर्यो रोरुचानः ॥ ४-१-७

२२. अपश्यं गोपामनिपद्यमानम्
आ च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान
आ वरीवर्ति भुवनेष्वन्तः ॥ १०-१७७-३

२३. अदितिर्द्यौरदितिरन्तरिक्षम्
अदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना
अदितिर्जातमदितिर्जनित्वम् ॥ १-८९-१०

# त्रयोदशी।

## मनुः

१. अहम् मनुरभवम् सूर्यश्चाहम्
कक्षीवान् ऋषिरस्मि विप्रः।
अहम् कुत्समार्जुनेयं नि ऋञ्जे
अहम् कविरुशना पश्यता मा। ४-२६-१

२. अहम् भूमिमददामार्याय
अहम् वृष्टिम् दाशुषे मर्त्याय।
अहमपो अनयम् वावशाना
मम देवासो अनु केतुमायन्॥ ४-२६-२

३. अहम् पुरो मन्दसानो वि ऐरम्
नव साकम् नवतीः शम्बरस्य।
शततमं वेश्यम् सर्वताता
दिवोदासमतिथिग्वम् यदावम्॥ ४-२६-३

४. अहम् भुवं वसुनः पूर्व्यस्पतिर्
अहम् धनानि सं जयामि शश्वतः।
मा हवन्ते पितरं न जन्तवो
अहम् दाशुषे वि भजामि भोजनम्॥ १०-४८-१

५. अहमिन्द्रो रोधो वक्षो अथर्वणम्
त्रिताय गा अजनयमहेरधि।
अहम् दस्युभ्यः परि नृम्णमाददे
गोत्रा शिक्षन् दधीचे मातरिश्वने॥ १०-४८-२

६. मह्यम् त्वष्टा वज्रमतक्षदायसम्
मयि देवासो अवृजन्नपि क्रतुम्।
ममानीकं सूर्यस्येव दुष्टरम्
मामार्यन्ति कृतेन कर्त्वेन च॥ १०-४८-३

७. अहमिन्द्रो न परा जिग्य इद्धनम्
न मृत्यवे अव तस्थे कदा चन ।
सोममिन्मा सुन्वन्तो याचता वसु
न मे पूरवः सख्ये रिषाथन ॥ १०-४८-५

८. अभि इदमेकमेको अस्मि निष्षाळ्
अभी द्वा किमु त्रयः करन्ति ।
खले न पर्षान् प्रति हन्मि भूरि
किं मा निन्दन्ति शत्रवो अनिन्द्राः ॥ १०-४८-७

९. आदित्यानां वसूनां रुद्रियाणाम्
देवो देवानाम् न मिनामि धाम ।
ते मा भद्राय शवसे ततक्षुर्
अपराजितमस्तृतमषाळ्हम् ॥ १०-४८-११

१०. अहम् रुद्रेभिर्वसुभिश्चराभि
अहमादित्यैरुत विश्वदेवैः ।
अहम् मित्रावरुण उभा बिभर्मि
अहमिन्द्राग्नी अहमश्विना उभा ॥ १०-१२५-१

११. अहम् सोममाहनसं बिभर्मि
अहम् त्वष्टारमुत पूषणं भगम् ।
अहम् दधामि द्रविणं हविष्मते
सुप्राव्ये यजमानाय सुन्वते ॥ १०-१२५-२

१२. अहं राष्ट्री सङ्गमनी वसूनाम्
चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा
भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ १०-१२५-३

१३. मया सो अन्नमत्ति यो विपश्यति
यः प्राणिति य ईं शृणोति उक्तम् ।
अमन्तवो मां त उप क्षियन्ति
श्रुधि श्रुत श्रद्धिवं ते वदामि

१४. अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तंतमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ १०-१२५-५

१५. अहं रुद्राय धनुरातनोमि
ब्रह्मद्विषे शरवे हन्तवा उ ।
अहम् जनाय समदं कृणोमि
अहम् द्यावापृथिवी आ विवेश ॥ १०-१२५-६

१६. अहम् सुवे पितरमस्य मूर्धन्
मम योनिरप्सु अन्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वा
उतामूम् द्याम् वर्ष्मणोप स्पृशामि ॥ १०-१२५-७

१७. अहमेव वात इव प्र वामि
आरभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्या
एतावती महिना सम्बभूव ॥ १०-१२५-८

१८. अहम् दाम् गृणते पूर्व्यं वसु
अहम् ब्रह्म कृणवं मह्यम् वर्धनम् ।
अहम् भुवं यजमानस्य चोदिता
अयज्वनः साक्षि विश्वस्मिन्भरे ॥ १०-४९-१

१९. मां धुरिन्द्रं नाम देवता
दिवश्च ग्मश्चापां च जन्तवः ।
अहम् हरी वृषणा विव्रता रघू
अहम् वज्रम् शवसे धृष्णु आ ददे ॥ १०-४९-२

२०. अहम् सप्तहा नहुषो नहुष्टरः
प्राश्रावयम् शवसा तुर्वशं यदुम् ।
अहम् नि अन्यं सहसा सहस्करम्
नव व्राधतो नवतिं च वक्षयम् ॥ १०-४९-८

२१. अहम् तदासु धारयम् यदासु
न देवश्चन त्वष्टाधारयद्रुशन् ।
स्पार्हं गवामूधःसु वक्षणासु
आ मधो [illegible] ॥ १०-४९-१०

२२. एवा देवान [illegible]
प्र च्यौत्नेन मघवा सत्यराधाः ।
विश्वेत्ता ते हरिवः शचीवः
अभि तुरासः स्वयशो गृणन्ति ॥ १०-४९-११

२३. एक एवाग्निर्बहुधा समिद्धः
*एकः सूर्यो विश्वमनु प्रभूतः ।*
एकैवोषा सर्वमिदं वि भाति
एकं वा इदं वि बभूव सर्वम् ॥ ८-५८-२

२४. परीत्य भूतानि परीत्य लोकान्
परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतस्य
आत्मनात्मानमभि सं विवेश ॥ यजु. ३२-११

२५. तदेवाग्निस्तदादित्यः
*तद्वायुस्तदु चन्द्रमाः ।*
तदेव शुक्रम् तद् ब्रह्म
ता आपः स प्रजापतिः [illegible] ३२-१

२६. आदित्यानामवसा नूतनेन
सक्षीमहि शर्मणा [illegible]
अनागास्त्वे अदितित्वे [illegible]
इमं यज्ञं दधतु [illegible] ३-८-१-१

# चतुर्दशी ।

## नासदीयम्

१. नासदासीन्नो सदासीत्तदानीम्
नासीद्रजो न व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्मन्
अम्भः किमासीद्गहनं गभीरम् ॥ १०-१२९-१

२. न मृत्युरासीदमृतं न तर्हि
न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं
तस्माद्धान्यन्न परः किं चनास ॥ १०-१२९-२

३. तम आसीत्तमसा गूळ्हमग्रे
अप्रकेतं सलिलं सर्वं आ इदम् ।
तुच्छ्येन आभ्वपिहितं यदासीत्
तपसस् तन् महिना अजायतैकम् ॥ १०-१२९-३

४. कामस्तदग्रे समवर्तताधि
मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन्
हृदि प्रतीष्या कवयो मनीषा ॥ १०-१२९-४

५. तिरश्चीनो विततो रश्मिरेषाम्
अधः स्विदासीदुपरि स्विदासीत् ।
रेतोधा आसन्महिमान आसन्त्
स्वधा अवस्तात्प्रयतिः परस्तात् ॥ १०-१२९-५

६. को ददर्श प्रथमं जायमानम्
अस्थन्वन्तम् यदनस्था बिभर्ति ।
भूम्या असुरसृगात्मा क्व स्वित्
को विद्वांसमुप गात्प्रष्टुमेतत् ॥ १-१६४-४

७. किं स्विद्वनं क उ स वृक्ष आस
यतो द्यावापृथिवी निष्टतक्षुः ।
सन्तस्थाने अजरे इत ऊती
अहानी पूर्वीरुषसो जरन्त ॥ १०-३१-७

८. किं स्विद्विनं क उ स वृक्ष आस
यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तन्
यद् अध्यतिष्ठद्भुवनानि धारयन् ॥ १०-८१-४

९. को अद्धा वेद क इह प्र वोचत्
कुत आजाता कुत इयं विसृष्टिः ।
अर्वाग्देवा अस्य विसर्जनेन
अथा को वेद यत आ बभूव ॥ १०-१२९-६

१०. इयं विसृष्टिर्यत आ बभूव
यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन्
सो अङ्ग वेद यदि वा न वेद ॥ १०-१२९-७

११. नैतावदेना परो अन्यदस्ति
उक्षा स द्यावापृथिवी बिभर्ति ।
स्वचं पवित्रं कृणुत स्वधावान्
यदीं सूर्यं न हरितो वहन्ति । १०-३१-८

---

# पञ्चदशी।

## मधुमती

१. मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः॥ १-९०-६

२. मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः।
मधु द्यौरस्तु नः पिता॥ १-९०-७

३. मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः।
माध्वीर्गावो भवन्तु नः॥ १-९०-८

४. मधु नो द्यावापृथिवी मिमिक्षताम्।
मधुश्चुता मधुदुघे मधुव्रते।
दधाने यज्ञं द्रविणं च देवता
महिश्रवो वाजमस्मे सुवीर्यम्॥ ६-७०-५

५. ममाग्ने वर्चो विहवेष्वस्तु
वयं त्वेन्धानास्तन्वं पुषेम।
मह्यं नमन्तां प्रदिशश्चतस्रं
त्वयाध्यक्षेण पृतना जयेम॥ १०-१२८-१

६. मम देवा विहवे सन्तु सर्व
इन्द्रवन्तो मरुतो विष्णुरग्निः।
ममान्तरिक्षमुरुलोकम् अस्तु
मह्यम् वातः पवताम् कामे अस्मिन्॥ १०-१२८-२

७. मयि देवा द्रविणमा यजन्ताम्
मय्याशीरस्तु मयि देवहूतिः।
दैव्या होतारो वनुषन्तो पूर्वे
अरिष्टाः स्याम तन्वा सुवीराः॥ १०-१२८-३

८. मह्यं यजन्तु मम यानि हव्या
आकूतिः सत्या मनसो मे अस्तु।
एनो मा नि गां कतमच्चनाहम्
विश्वे देवासो अधि वोचता नः॥ १०-१२८-४

९. शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं नो इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ १-९०-९

१०. शं नो द्यावापृथिवी पूर्वहूतौ
शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु
शं नो रजसस्पतिरस्तु जिष्णुः ॥ ७ ३५-५

११. शं न इन्द्रो वसुभिर्देवो अस्तु
शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः
शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥ ७-३५-६

१२. शं नः सत्यस्य पतयो भवन्तु
शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः
शं नो भवन्तु पितरो हवेषु ॥ ७-३५-१२

१३. उदीर्ध्वं जीवो असुर्न आगात्
अप प्रागात्तम आ ज्योतिरेति ।
अरैक् पन्थां यातवे सूर्याय
अगन्म यत्र प्रतिरन्त आयुः ॥ १-११३-१६

१४. सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः ।
ससन्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥ ७-५५-५

१५. ये देवानां यज्ञिया यज्ञियानां
मनोर्यजत्रा अमृता ऋतज्ञाः ।
ते नो रासन्तामुरुगायमद्य
यूयं पात स्वस्तिभिः सदा नः ॥ ७-३५-१५

१६. आदित्या रुद्रा वसवो जुषन्त
इदं ब्रह्म क्रियमाणं नवीयः ।
शृण्वन्तु नो दिव्याः पार्थिवासो
गोजाता उत ये यज्ञियासः ॥ ७-३५-१४

# अनु–क्रमणिका

## इन्द्रावरुणम्

(भारती)

१. इमं नो अग्न उप यज्ञमेहि
पञ्चयामं त्रिवृतं सप्ततन्तुम्।
असो हव्यवाळुत नः पुरोगा
ज्योगेव दीर्घं तम आशयिष्ठाः॥ १०-१२४-१

२. अदेवाद्देवः प्रचता गुहा यन्
प्रपश्यमानो अमृतत्वमेमि।
शिवं यत्सन्तमशिवो जहामि
स्वात्सख्यादरणीं नाभिमेमि॥ १०-१२४-२

३. पश्यन्नन्यस्या अतिथिं वयाया
ऋतस्य धाम वि मिमे पुरूणि।
शंसामि पित्रे असुराय शेवम्
अ यज्ञियाद्यज्ञियं भागमेमि॥ १०-१२४-३

४. बह्वीः समा अकरम् अन्तरस्मिन्
इन्द्रं वृणानः पितरं जहामि।
अग्निः सोमो वरुणस्ते च्यवन्ते
पर्यावर्द्राष्ट्रम् तदवामि आयन्॥ १०-१२४-४

५. निर्माया उ त्ये असुरा अभूवन्
त्वं च मा वरुण कामयासे।
ऋतेन राजन्ननृतं विविञ्चन्
मम राष्ट्रस्याधिपत्यमेहि॥ १०-१२४-५

६. इदं स्वरिदमिदास वाम्
अयं प्रकाश उर्व अन्तरिक्षम्।
हनाव वृत्रं निरेहि सोम
हविष्ट्वा सन्तं हविषा यजाम॥ १०-१२४-६

७. कविः कवित्वा दिवि रूपमासजद्
अप्रभूती वरुणो निरपः सृजन्।
क्षेमं कृण्वाना जनयो न सिन्धवस्
ता अस्य वर्णं शुचयो भरिभ्रति ॥ १०-१२४-७

८. ता अस्य ज्येष्ठमिन्द्रियं सचन्ते
ता ईमा क्षेति स्वधया मदन्तीः।
ता ईम् विशो न राजानं वृणाना
बीभत्सुवो अप वृत्रादतिष्ठन्॥ १०-१२४-८

९. बीभत्सूनाम् सयुजं हंसमाहुर्
अपां दिव्यानां सख्ये चरन्तम्।
अनुष्टुभम् अनु चर्चूर्यमानम्
इन्द्रं नि चिक्युः कवयो मनीषा ॥ १०-१२४-९

(इला)

१०. किं न इन्द्र जिघांससि
भ्रातरो मरुतस्तव।
तेभिः कल्पस्व साधुया
मा नः समरणे वधीः ॥ १-१७०-२

(भारती)

११. किं नो भ्रातरगस्त्य
सखा सन्नति मन्यसे।
विद्मा हि ते यथा मनो
अस्मभ्यमिन्न दित्ससि ॥ १-१७०-३

(वरुण)

१२. मम द्विता राष्ट्रं क्षत्रियस्य
विश्वायोर्विश्वे अमृता यथा नः।
क्रतुं सचन्ते वरुणस्य देवा
राजामि कृष्टेरुपमस्य वव्रेः ॥ ४-४२-१

१३. अहं राजा वरुणो मह्यम्
तानि असुर्याणि प्रथमा धारयन्त।

ऋतुं सचन्ते वरुणस्य देवाः
राजामि कृष्टेरुपमस्य वव्रेः ॥ ४-४२-२

(इन्द्र)

१४. अहमिन्द्रो वरुणस्ते महित्वा
उर्वी गभीरे रजसी सुमेके
त्वष्टेव विश्वा भुवनानि विद्वान्
समैरयं रोदसी धारयं च ॥ ४-४२-३

१५. अहमपो अपिन्वमुक्षमाणा
धारयं दिवं सदन ऋतस्य ।
ऋतेन पुत्रो अदितेर्ऋतावा
उत त्रिधातु प्रथयद्विभूम ॥ ४-४२-४

१६. मां नरः सु अश्वा वाजयन्तो
मां वृताः समरणे हवन्ते ।
कृणोमि आजिम् मघवाहमिन्द्र
इयर्मि रेणुमभिभूत्योजा ॥ ४-४२-५

(वरुण)

१७. अहं ता विश्वा चकरं नकिर्मा
दैव्यं सहो वरते अप्रतीतम्
यन्मा सोमासो ममदन्यदुक्था
उभे भयेते रजसी अपारे ॥ ४-४२-६

१८. विदुष्टे विश्वा भुवनानि तस्य
ता प्र ब्रवीषि वरुणाय वेधः ।
त्वं वृत्राणि शृण्विषे जघन्वान्
त्वं वृतान् अरिणा इन्द्र सिन्धून् ॥ ४-४२-७

(भारती)

१९. देवाश्चित्ते असुर्याय पूर्वे
अनु क्षत्राय ममिरे सहांसि ।
इन्द्रो मघानि दयते विषह्य
इन्द्रं वाजस्य जोहुवन्त सातौ ॥ ७-२१-७

(इला)

२०. त इद्देवानां सधमाद आसन्
ऋतावानः कवयः पूर्व्यासः।
गूळ्हं ज्योतिः पितरो अन्वविन्दन्
सत्यमन्त्रा अजनयन् उषासम्॥ ७-७६-४

(सरस्वती)

२१. नू मे ब्रह्माण्यग्न उच्छशाधि
त्वं देव मघवद्भ्यः सुषूदः।
रातौ स्यामोभयास आ ते
यूयं पात स्वस्तिभिः सदा नः॥ ७-१-२०

२२. अस्माकमत्र पितरस्त आसन्
सप्त ऋषयो दौर्गहे बध्यमाने।
त आयजन्त त्रसदस्युमस्या
इन्द्रं न वृत्रतुरमर्धदेवम्॥ ४-४२-८

२३. पुरुकुत्सानी हि वामदाशद्
हव्येभिरिन्द्रावरुणा नमोभिः।
अथा राजानं त्रसदस्युमस्या
वृत्रहणं ददथुरर्धदेवम्॥ ४-४२-९

२४. राया वयम् ससवांसो मदेम
हव्येन देवा यवसेन गावः।
तां धेनुमिन्द्रावरुणा युवं नो
विश्वाहा धत्तमनपस्फुरन्तीम्॥ ४-४२-१०

साम

२५. द्वे स्रुती अशृणवं पितॄणाम्।
अहं देवानामुत मर्त्यानाम्।
ताभ्यामिदं विश्वमेजत्समेति
यदन्तरा पितरं मातरं च १०-८...

२६. तदद्य वाचः प्रथमं मसीय
येनासुरान् अभि देवा असाम।
ऊर्जाद उत यज्ञियासः
पञ्च जना मम होत्रं जुषध्वम्॥ १०-५३-४

२७. यः पूर्व्याय वेधसे नवीयसे
सुमज्जानये विष्णवे ददाशति।
यो जातमस्य महतो महि ब्रवत्
सेदु श्रवोभिर्युज्यं चिदभ्यसत्॥ १-१५६-२

२८. आ भारती भारतीभिः सजोषा
इळा देवैर्मनुष्येभिरग्निः।
सरस्वती सारस्वतेभिरर्वाक्
तिस्रो देवीर्बर्हिरेदं सदन्तु॥ ७-२-८

२९. सङ्गच्छध्वम् सं वदध्वम्
सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे
सञ्जानाना उपासते॥ १०-१९१-२

३०. समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभि मन्त्रये वः
समानेन वो हविषा जुहोमि॥ १०-१९१-३

३१. समानी व आकूतिः
समाना हृदयानि वः।
समानमस्तु वो मनो
यथा वः सुसहासति॥ १०-१९१-४

॥ ॐ सत् रुद्र अकाल॥

---

# PROLOGUE

1. को अद्धा वेद

Who really knows and who will tell, whence came this, whence this Creation? The angels also are subsequent to the Creation. How can one know whence it sprang up?

2. नासद् आसीन् नो सद् आसीत्

Then there was neither Existence, nor Non-Existence. Then there was neither the atmosphere, nor what is beyond the skies. What was the top-cover and the bottom-board? and where? Was it a deep dense mist?

3. न मृत्युर् आसीद्

Then there was neither death, nor was there life. No sign was there of Night and Day. That Single One, self-contained, breathed without the help of air. There existed nothing other than Itself.

4. कामस् तदग्रे

It was Desire that appeared first of all. It became the seed of the Mind. It drew up the line of distinction between what would be and what would not. The wise ones know this in their heart by deep thinking.

5. तिरश्चीनो विततो

Their rays shooted out above and below, and side-wise in all directions. They formed the germ and they formed the expansion—Nature below and the controlling Spirit above.

6. इयं विसृष्टिर् यत् आबभूव

Whence came this Universe, and what it did become and what it did not, He alone knows—if any body knows at all—who is the overseer in the High Heavens.

7. को अस्य वेद प्रथमस्य अहः

Who knows anything about the first day? Who saw it and who can tell? Great is the dignity of Mitra and Varuna. How can you explain to men the inexplicable?

8. न विजानामि

I do not know what I happen to be. Fettered and hampered, I roam at random. It is only when the first call of conscience reaches me, that I wake up to my destiny in the universe.

9. भद्रं कर्णेभिः शृणुयाम

May we, with our ears hear nothing but the Right, Oh Devas; and with eyes see nothing but the good, Oh Yajatras. And with our firm limbs and bodies serving, may we attain the age apportioned by the Lord.

10. यत् प्रज्ञानम् उत चेतो

The Mind is the organ of Cognition, Conation and Volition. It is the undying light in the heart of men. No act may be done without the help of the mind. May my mind, such that it is, be inspired with right desires.

11. दृष्ट्वा रूपे व्याकरोत्

Prajapati has made the Right different from the Wrong, and has planted in us, regard for Truth and aversion for Un-truth.

12. सुविज्ञानं चिकितुषे जनाय

It is manifest to the thoughtful that truth and falsehood oppose each other. Of these two, that which is true and honest, Soma protects. He brings the false to nothing.

13. ध्रुवं ज्योतिर्निहितं

Determined Mind (Moral Reason) is the unfailing light in men, placed for true vision. All the angels, unanimously and unambiguously point alone to Duty.

14. वैश्वानरस्य सुमतौ स्याम

May I be in the good graces of Conscience [which is present in all (विश्व) men (नर).] It is the sole glorious monarch of all the worlds. Born within, it passes judgment on everying. Conscience rivals the sun in revealing truth.

15. अहश्च कृष्णमहर् अर्जुनं च

Both the dark day and the white day are there. Between them, they cover the whole of the known world. *But* Conscience, like a puissant king, is able to cross the region of darkness, just as fire does by rays of light.

16 यज्ञेन यज्ञमयजन्त देवास्

"Duty for the sake of Duty" is what the Devas did That was the premier law Glorious, they entered into heaven where other self-made Devas had entered before

17 द्वा सुपर्णा सयुजा सखाया

There are two birds of beautiful plumes, equal friends and allies They live on the same tree One of them eats its fruits which appear delicious The other one avoids eating and therefore grows in glory

18 वेदाहम् एत पुरुष महन्तम्

I have known the Great Person I have seen Him, bright as the sun beyond darkness Only by knowing Him one can conquer death There is no other way for it

19 त्रय केशिन ऋतुथा

There are three Entities that constitute the order (Man, God and Absolute) Of them, one (Man) moves in the universe One (God), by his power, uttered (created) the universe The existence of the third one (Absolute) is known, but not his nature

20 त्रिरस्य ता परमा

Three are the real ultimate aspects of Divine Agni [viz (1) the Infinite, (2) the Finite, and (3) the Infinite within the Finite] The Infinite comes to be encompassed within the Finite—pure, bright, lordly and radiant

21 अहम् मनुरभवम्

I had been Manu and I am the Sun I am the wise sage Kakshivan It was I who restrained Kutsa, son of Arjuna I am Kavi Usanas—look at Me

22 अहं रुद्रेभिर्वसुभिश्चरामि

I move about with the iconic Vasus, the an-iconic Adityas, and their common Prototype the Rudras—in fact with all the Deities I propitiate both Varuna and his friend (Indra)—the Twins, represented in Fire as Indra

23 प्रजापतिश्चरति गर्भे अन्तर

Prajapati roams about, concealed from view He is born everywhere, yet he is not born (to exhaustion) Wise men know his births All the worlds have their being in Him

24. न तं विदाथ

Do you not know Him—Him who made this universe? He dwells in your heart as well. To some He appears as if shrouded in a mist—to others He is a matter of conjecture only. He is the source of the Categorical Imperative, and in Him is the heart's rest.

25. सा ते जीवातुर्

He is the essence of your life. Know Him well. Do not forget Him in the bustle of life. He manifests the light and hides the vapour. He does not free His foot from the robes that veil it.

26. यो जात एव

The Deity, who, as soon as He came to be known, waked up men to a sense of Duty, before whose breath the two worlds tremble, and who is the perfection of manliness, He, oh men, is Indra.

27. अस्तभ्नाद्याम्

Omniscient Asura—He propped the heavens and set limit to the width of the Universe. He sits in the world—the Lord of it. These all are the deeds of Varuna.

28. इन्द्रं मित्रं वरुणम्

They call Him by various names—Indra, Mitra, Varuna or Agni. He is also called the brilliant Suparna. There is only one Entity—sages name it variously as Indra, Varuna or Matariswarn.

29. विश्वतश्चक्षुर्

He has eyes on all sides, and mouth and arms and feet on all. He created the heaven and the earth, and bellowed them into shape with his arms as if with two wings.

30. स जायत

He sprang up as the first of all entities, in the origin of creation, at the source of the cosmos. Footless and headless, both his ends concealing, he draws himself together, in the home of strength.

31. स पर्यगाच्छुक्रम्

He looms bright, incorporeal, unscathed, immaterial, pure and untainted. He is sage and savant, omnipresent

